# श्रीछिन्नमस्ताष्टोत्तरशतनामस्तोत्रम्

श्रीपार्वत्युवाच --

नाम्नां सहस्रमं परमं छिन्नमस्ता-प्रियं शुभम् ।
कथितं भवता शम्भो सद्यः शत्रु-निकृन्तनम् ॥ १॥

पुनः पृच्छाम्यहं देव कृपां कुरु ममोपरि ।
सहस्र-नाम-पाठे च अशक्तो यः पुमान् भवेत् ॥ २॥

तेन किं पठ्यते नाथ तन्मे ब्रूहि कृपा-मय ।

श्री सदाशिव उवाच -

अष्टोत्तर-शतं नाम्नां पठ्यते तेन सर्वदा ॥ ३॥

सहस्र्-नाम-पाठस्य फलं प्राप्नोति निश्चितम् ।
ॐ अस्य श्रीछिन्नमस्ताष्टोत्तर-शत-नाम-स्तोत्रस्य सदाशिव
ऋषिरनुष्टुप् छन्दः श्रीछिन्नमस्ता देवता
मम-सकल-सिद्धि-प्राप्तये जपे विनियोगः ॥

ॐ छिन्नमस्ता महाविद्या महाभीमा महोदरी ।
चण्डेश्वरी चण्ड-माता चण्ड-मुण्ड्-प्रभञ्जिनी ॥ ४॥

महाचण्डा चण्ड-रूपा चण्डिका चण्ड-खण्डिनी ।
क्रोधिनी क्रोध-जननी क्रोध-रूपा कुहू कला ॥ ५॥

कोपातुरा कोपयुता जोप-संहार-कारिणी ।
वज्र-वैरोचनी वज्रा वज्र-कल्पा च डाकिनी ॥ ६॥

डाकिनी कर्म-निरता डाकिनी कर्म-पूजिता ।
डाकिनी सङ्ग-निरता डाकिनी प्रेम-पूरिता ॥ ७॥

खट्वाङ्ग-धारिणी खर्वा खड्ग-खप्पर-धारिणी ।
प्रेतासना प्रेत-युता प्रेत-सङ्ग-विहारिणी ॥ ८॥

छिन्न-मुण्ड-धरा छिन्न-चण्ड-विद्या च चित्रिणी ।
घोर-रूपा घोर-दृष्टर्घोर-रावा घनोवरी ॥ ९॥

योगिनी योग-निरता जप-यज्ञ-परायणा ।
योनि-चक्र-मयी योनिर्योनि-चक्र-प्रवर्तिनी ॥ १०॥

योनि-मुद्रा-योनि-गम्या योनि-यन्त्र-निवासिनी ।
यन्त्र-रूपा यन्त्र-मयी यन्त्रेशी यन्त्र-पूजिता ॥ ११॥

कीर्त्या कर्पादनी काली कङ्काली कल-कारिणी ।
आरक्ता रक्त-नयना रक्त-पान-परायणा ॥ १२॥

भवानी भूतिदा भूतिर्भूति-दात्री च भैरवी ।
भैरवाचार-निरता भूत-भैरव-सेविता ॥ १३॥

भीमा भीमेश्वरी देवी भीम-नाद-परायणा ।
भवाराध्या भव-नुता भव-सागर-तारिणी ॥ १४॥

भद्र-काली भद्र-तनुर्भद्र-रूपा च भद्रिका ।
भद्र-रूपा महा-भद्रा सुभद्रा भद्रपालिनी ॥ १५॥

सुभव्या भव्य-वदना सुमुखी सिद्ध-सेविता ।
सिद्धिदा सिद्धि-निवहा सिद्धासिद्ध-निषेविता ॥ १६॥

शुभदा शुभफ़्गा शुद्धा शुद्ध-सत्वा-शुभावहा ।
श्रेष्ठा दृष्ठि-मयी देवी दृष्ठि-संहार-कारिणी ॥ १७॥

शर्वाणी सर्वगा सर्वा सर्व-मङ्गल-कारिणी ।
शिवा शान्ता शान्ति-रूपा मृडानी मदानतुरा ॥ १८॥

इति ते कथितं देवि स्तोत्रं परम-दुर्लभमं ।
गुह्याद्-गुह्य-तरं गोप्यं गोपनियं प्रयत्नतः ॥ १९॥

किमत्र बहुनोक्तेन त्वदग्रं प्राण-वल्लभे ।
मारणं मोहनं देवि ह्युच्चाटनमतः परमं ॥ २०॥

स्तम्भनादिक-कर्माणि ऋद्धयः सिद्धयोऽपि च ।
त्रिकाल-पठनादस्य सर्वे सिध्यन्त्यसंशयः ॥ २१॥

महोत्तमं स्तोत्रमिदं वरानने मयेरितं नित्य मनन्य-बुद्धयः ।

पठन्ति ये भक्ति-युता नरोत्तमा भवेन्न तेषां रिपुभिः पराजयः ॥ २२॥

॥ इति श्रीछिन्नमस्ताष्टोत्तरशतनाम स्तोत्रम् ॥